


तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

सचत्रिमासपत्रिका

जून् २०२१ ... रू.५/-

तिरुमल श्रीनिवासस्य ज्येष्ठाभिषेकः।
(२०२१, जून् २२ तः २४ पर्यन्तम्)

SIVAPRASAD



तिरुमलतिरुपतिदेवस्थानम्

# कार्वेटिनगरम्
# श्रीवेणुगोपालस्वामिनः
# ब्रह्मोत्सवः

## २०२१ जून् ०२ तः १० पर्यन्तम्

**०२-०६-२०२१ सौम्यवासरः**

प्रातः -ध्वजारोहणम्, रात्रौ - चन्द्रप्रभवाहनम्

**०३-०६-२०२१ बृहस्पतिवासरः**

प्रातः - सूर्यप्रभवाहनम्, रात्रौ - महाशेषवाहनम्

**०५-०६-२०२१ भृगुवासरः**

प्रातः - लघुशेषवाहनम्, रात्रौ - सिंहवाहनम्

**०५-०६-२०२१ मन्दवासरः**

प्रातः - कल्पवृक्षवाहनम्, रात्रौ - हनुमद्वाहनम्

**०६-०६-२०२१ भानुवासरः**

प्रातः - मौक्तिकमण्टपवाहनम्, रात्रौ - गरुडवाहनम्

**०७-०६-२०२१ इन्दुवासरः**

प्रातः - कल्याणोत्सवः, रात्रौ - गजवाहनम्

**०८-०६-२०२१ भौमवासरः**

प्रातः - रथोत्सवः, रात्रौ - धूल्युत्सवः

**०९-०६-२०२१ सौम्यवासरः**

प्रातः - सर्वभूपालवाहनम्, रात्रौ - अश्ववाहनम्

**१०-०६-२०२१ बृहस्पतिवासरः**

प्रातः - चक्रस्नानम्, रात्रौ - ध्वजावरोहणम्



## गीतामृतम्

सञ्जय उवाच-

एवमुक्तो हृषीकेशो गुडाकेशेन भारत।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम्॥

(भगवद्गीता २४/१)

हे भारत! भरतवंशोद्भव धृतराष्ट्र! निद्रायाः नियामकेन जितेन्द्रियेण अर्जुनेन उक्तप्रकारेण श्रीकृष्णः उभयोः सेनयोः मध्यभागे श्रेष्ठतमं रथं स्थापयित्वा अर्जुनं प्रति यत्किञ्चिदुक्तवानिति सञ्जयः धृतराष्ट्रं प्रति वदति।

## सङ्कीर्तनम्



करारविन्देन पदारविन्दं
मुखारविन्दे विनिवेशयन्तम्
वटस्य पत्रस्य पुटे शयानं
बालं मुकुन्दं मनसा स्मरामि ॥१॥

संहृत्य लोकान्वटपत्रमध्ये
शयानमाद्यन्तविहीनरूपम्।
सर्वेश्वरं सर्वहितावतारं
बालं मुकुन्दं मनसा स्मरामि ॥२॥

(बालमुकुन्दाष्टकम्)



# जैवाहारः.... सात्विकः

अद्यत्वे वयं तादृशपरिस्थितौ स्मः यत्र ''सङ्कुलित, शीघ्रपक्वादिभोजनमेव अधिकतया उपयुञ्महे,अल्पे समये अधिकं कार्यं साधनीयमिति धिया त्वरमाणाः वयम् एतादृशीं व्यवस्थामेव इच्छामः। ''हिताहारः, मिताहारः, शुद्धजलम्'' एतादृशपदान्यपि श्रृणुमः यानि भक्ष्यनिर्मातारः उपभोक्तृणां स्वास्थ्यविषये अतीव श्रद्धालवः सन्तीति प्रदर्शयितुम् उपयुज्यन्ते।

''स्वस्थे शरीरे स्वस्थं मनः'' इति उक्तिवत् नीरोगानारोग्यशरीरमनसोः अभेद्यः बन्धः वर्तते एवेति विज्ञानेनापि निरूपितम्।

शरीरं, मनः, आत्मा च मिलित्वा एकः गणः इति वक्तुं शक्यते। यतः शारीरक-मानसिक-आध्यात्मिकस्वास्थ्यानि परस्परमाश्रित्य तिष्ठन्ति। तत्र शरीरे स्वस्थे सत्येव अशिष्टं सर्वं साध्यते। अतः उन्नताहारः शरीरस्वास्थ्यनिर्मापकत्वेन मानसिक-आध्यात्मिकस्वास्थ्यस्याप्युपकारकः भवति। सैव सर्वत्र शान्तिश्च प्रददाति।

श्रीकृष्णः अपि भगवद्गीतायाम् अह; आहारः सात्विकः, राजसिकः, तामसिक इति त्रिविधः इति।

सात्विकः - आयुस्सत्त्वबलारोग्यसुखप्रीतिविवर्धनाः।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्विकप्रियाः॥

आयुः, सत्त्वं, मनोबलं, देहबलम्, आरोग्यं, सुखं, प्रीतिं च जनयन् घृतमिश्रितः, हृदयस्य हितकरः वा आहारः सात्त्विकः इत्यर्थः।

राजसिकः - कट्वाम्ललवणात्युष्णतीक्ष्णरुक्षविदाहनः।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः॥

कटु - आम्ल-लवण-प्रधानः, अत्युष्णः, तीक्ष्णः, कर्कशः वा आहारः राजसिकः। स च शोकं, मोहं, विपदं च ददाति।

तामसिकः - यातयामं गतरसं पूतिपर्युषितं च यत्।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम्॥

निर्माणानन्तरं यामः अतीतः, रसहीनः, दुर्गन्धयुक्तः, पर्युषितः, उच्छिष्टः, अमेध्यः वा आहारः तामसिकः इत्यर्थः।

अतः शरीरशुद्ध्यै, निर्मलबुद्ध्यै च सात्विकाहारसेवनमत्यन्तम् आवश्यकम्। तेन च वयं सहजीविनां कृते दयालवाः, उदारमनसः च भवेम।

प्राचीना अपि ब्रुवन्ति यत् रसायनाद्यनुपयोगेन क्षेत्रे यानि शाकादीन्युत्पादयन्ति तान्येव द्रव्याणि शकाहारत्वेन सात्विकाहारत्वेन स्वीकर्तव्यमिति।

यद्यपि विज्ञानेन नैके मार्गाः आविष्कृताः चेदपि पारम्परिकरीत्या उत्पाद्यमानाः शाकाहारा एवात्युत्तमा इत्यपि साधितमस्ति। अद्यत्वे मानवाः जैवशाकानाम् उपयोगम् अधिकतया कर्तुं आरब्धवन्तः। यतः जैवभोजनस्य अद्भुतं फलमस्तीति। भगवतः नैवेद्यरूपेण एतादृशपदार्थानां समर्पणम् अतिविशिष्टं भवति।

भवन्तः जानन्त्येव यत् ति.ति.दे. प्रतिदिनं बृहत्परिमाणकं भोजनं नैवेद्यरूपेण श्रीवेङ्कटेश्वराय समर्पयति इति। एवमेव भक्तेभ्यः अन्नदानं कुर्वन्तीति च। शताधिकवर्षेभ्यः प्रवर्तितः एतादृशोद्यमः इदानीं ति.ति.दे. पक्षतः पुनरुज्जीवितोऽस्ति। साक्षात् जैवकृषकानां सकाशादेव वस्तूनि क्रेतव्यानीति इदानीं निश्चितमस्ति इतीदं ईश्वराय भक्तेभ्यः च महत्त्वपूर्णं सेवनम् अस्ति।

''अन्नाद्भूतानि जायन्ते, जातान्यन्नेन जीवन्ति'' इति वेदवाक्योक्तं स्वास्थ्यकारणमन्नं ति.ति.दे. द्वारा दीयमानं मनसः आत्मनः शरीरस्य च स्वास्थ्यं परिकल्पयति।

तिरुमल-तिरुपतिदेवस्थानस्य सचित्रमासपत्रिका

सम्पुटिः-०८ सञ्चिका-०३

# जून् २०२१

श्री प्लवनामसंवत्सरस्य वैशाखकृष्णषष्ठीतः
प्लवनामसंवत्सरस्य ज्येष्ठकृष्णषष्ठीपर्यन्तम् - १९४१

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*



# सप्तगिरिः



मुखचित्रम् - तिरुमल श्रीश्रीनिवासस्य ज्येष्ठाभिषेकः

अन्तिमरक्षापुटः - जाबालि अञ्जनेयस्वामी (तिरुमल)

गौरवसम्पादकः-
डा.के.एस्.जवहर् रेड्डि I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
आचार्य के.राजगोपालन्, Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी
प्रकाशनमुद्रणविभागः, ति.ति.दे.,
मुद्रणालयः, तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.

**सूचना**

मुद्रितलेखानां विचाराः लेखकानामेव ।
एतद्विषये अस्माकं दायित्वं नास्ति।
*— प्रधानसम्पादकः*

## सङ्केतः

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९, २२६४३६०
सूचनानाम्, आक्षेपाणां च कृते सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org

एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-

# हनुमान् बहुसुन्दरः



- श्री वि.प्रदीपाचार्यः
चरवाणी - ९४९१६४६५३२

वैशाखमासस्य शुक्लदशमी हनुमज्जन्मदिनमिति ख्यातिः। औत्तरीयास्तु चैत्रशुक्लपौर्णमीति मन्यन्ते। अस्मिन् शुभदिने अञ्जनीवाय्वोः गर्भे जनिमलभतायं हनुमान्। रामस्य सेवायै एव जनितः सन् बाल्ये अतिमानुषचेष्टादिकं कृतवान् चेदपि अहर्निशं रामसेवायामेव स्थिरमनस्कः अयं महान्। तस्य व्यक्तित्वविषये नाम्नः स्मरणविषये च किञ्चिदिव दृष्टिं सारयामः।

- रामस्य दुःखशमनाय लङ्कां प्रविश्य सीताया शोधं कृतवान्। लङ्काप्रवेशसमये सिंहिका, लङ्किणीत्याद्यसुरशक्तीः जित्वा सीताया अङ्गुलीदानपुरस्सरं तस्याः चूडामणिं प्राप्य लङ्कादहनं कृत्वा श्रीरामं शुभवार्ताम् अब्रवीत्।
- युद्धसन्दर्भे श्रीरामस्य रथरूपेणापि सेवामकरोत्।
- श्रीरामनाम यत्र श्रूयते तत्र स्वसन्निधिं विदधाति। एवं नैकविधाः शुश्रूषाः हनुमता कृताः इति सर्वविदितमेव।

अत एव दास्यरूपभक्तेः दृष्टान्तरूपेण वदन्ति पण्डिताः।

**ज्ञाने विरागे हरिभक्तिभावे धृतिस्थितिप्राणबलेषु योगे।**
**बुद्धौ च नान्यो हनुमत्समानः पुमान् कदाचित् क्व च कश्चनैव॥**

इति स्तुत्या अपि ज्ञायते हनुमान् महान् हरिभक्तः इति।

किञ्च **निद्रा तन्द्रा भयं क्रोधो आलस्यं दीर्घसूत्रता।**
**षड्दोषाः पुरुषेणेह हातव्याः भूतिमिच्छता॥**

इति सुभाषितवचनानुसारं निद्रादिषड्दोषाः अवश्यं त्यक्तव्याः सर्वैः उन्नताकाङ्क्षिभिः। तत्र सुलभोपायम् अविज्ञाय क्लेशं ये अनुभवन्ति ते तु नित्यं हनुमत्स्मरणेन तान् स्वयं हन्तुं प्रभवन्ति -

**बुद्धिर्बलं यशो धैर्यं निर्भयत्वमरोगता।**
**अजाड्यं वाक्पटुत्वं च हनूमत्स्मरणाद्भवेत्॥** इत्युक्तरीत्या।

तथाहि - यस्य बुद्धिः = युक्तयुक्तविवेकः भवति सः आशयसिद्धिपर्यन्तं निद्रां = अनावश्यकविश्रान्तिं न स्वीकरोति। तन्द्रां = निद्रायाः आद्यवस्थामपि न याति च। तादृशबुद्धिदायकं हनुमन्नाम।

भयग्रस्तस्य निर्भयत्वं प्रदाय भयदूरं करोति।

क्रोधः = रक्तपीडनादिद्वारा जायते यः स रोगः। तेन रोगेण पिडिताय नीरोगतां बलं च दत्वा रक्षति। सर्वै रोगै रक्षतीत्यर्थः।

यस्य किमपि कार्यं कर्तुं धैर्यं न भवति, सैव सर्वत्र ''इदं श्वः कुर्मः'' इत्यादिरूपेण आलस्यं प्रदर्शयति। तादृशस्य धैर्यं दत्वा आलस्यं हरति।

दीर्घसूत्रता = बहुकालं यावत् लघुकार्यकरणं अर्थात् जाड्यम्। तादृशजाड्यं च निवारयति।

एतैः षड्दोषैः विमुक्तः चेदपि पुरुषः यदा वाक्पटुतामाप्नोति तदैव यश आप्नोति। ''नोरु मञ्चिदैते ऊरु मञ्चिदौतुन्दि'' इति सूक्तिरपि श्रूयते तेलुगुभाषायाम्। एतादृशवाक्पटुत्वं, यशः च ददाति।

तावन्महिमोपेतनाम्ना विभूषितं अञ्जनिपुत्रं हनुमन्तं न केवलं पर्वदिनेस्मिन्, अपि च प्रत्यहं स्मरामः -

**मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम्।**
**वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि॥**

इति।

किञ्च **सुन्दरे सुन्दरो रामः सुन्दरे सुन्दरी कथा।**
**सुन्दरे सुन्दरी सीता सुन्दरे सुन्दरं वनम्॥**
**सुन्दरे सुन्दरं काव्यं सुन्दरे सुन्दरः कपिः।**
**सुन्दरे सुन्दरं मन्त्रं सुन्दरे किं न सुन्दरम्॥**इति

दिशा रामायणे अत्यन्तसुन्दरं सुन्दरकाण्डं ये च भक्ताः पठन्ति, ते सर्वसुखान्याप्नुवन्ति इति निस्संशयः। वर्षेऽस्मिन् पर्वणि वा अस्य पारयणेन सुन्दरस्य हनुमतः अनुग्रहं प्राप्नुमः।





# मन्दाकिनी

- श्री. टि. विष्णुवर्धनः
चरवाणी - ९४४१२३२१३०

**श्रीगोविन्दपदाब्जापांसुकणिकापोपूतपाथश्छटा-**
**रङ्गत्तुङ्गतरङ्गमङ्गलझलञ्झालञ्झलीरञ्जिता।**
**मञ्जाल्लोकमलापकर्षणचणव्यग्रोल्बणाम्भःकणः**
**पुण्या विष्णुपदी नदी वितनुतां श्रेयांसि भूयांसि नः॥**

अथाऽस्मिन् विश्वे परिदृश्यमानं सर्वमपि जगत् परं ब्रह्मैवेति वेदवेदान्तविदुषामुपदेशसारः। स्थाणुर्वा शैलो वा वृक्षो वा नदनदीतटास्समुद्रो वा किमपि वा भवतु तद्भगवद्विभूतिरेवेति साक्षाद्भगवानेवेति च भावनापरम्परा अविच्छिन्नरूपेण गङ्गाप्रवाहवत् अस्मिन् भारतीयसम्प्रदाये प्रवहति। तादृशभावनायामेव भगवान् विद्यत इति प्राज्ञोपदेशः। तद्यथा -

**न काष्टे विद्यते देवः न पाषाणे न मृण्मये।**
**भावे हि विद्यते देवः तस्माद् भावो हि कारणम्॥**

इति।

विशिष्यास्मिन् भक्तिभावनासम्मिलितकर्मभूमौ नदीनां स्थानं सर्वोपरि वर्तते। नदीतीरवासः अत्युत्तम इति मार्गदर्शकानामस्माकं महर्षिणां जीवनसरण्या ज्ञायते। यथा च बालकाः स्वमातुः समीपे स्थित्वा तस्याः करुणाप्रवाहे पिपासादिबाधान् सर्वान् जित्वा आनन्दमयजीवनं यापयन्ति, तद्वदेव वैदिकधर्माचरणशीलाः पुण्यनदीतीरेषु फलवन्ति दिनानि नयन्ति। बाल्ये यदि यया अप्यदृश्यमानया पीडया बालकः रोदनं करोति तर्हि तं बालकं प्रेमपूर्णमातुरङ्के स्थापयन्ति चेत् झटिति स बालकः पीडाविमुक्तस्सन् आनन्दमनुभवति। तद्वदेव लोकेनित्यं पुण्यनदीस्नानेन सकलरोगपापविमुक्ता भवन्ति जनाः।

एतादृशपुण्यनदीनां गणनाप्रसङ्गे प्रथमा भवति गङ्गा। यतो हि विष्णुपदाब्जसम्भूता शिवकपर्दशालिनी निलिम्पनिर्झरी गङ्गा न केवला महानदी, अपि तु ''स्रोतसामस्मि जाह्नवी'' इति भगवद्वचनानुसारं सा मन्दकिनी सकलमानवपापानां तापानां च हारिणी भक्तिमुक्तिप्रदायिनी च भवति। अत एव भारतीयानाम् अम्भोमयी महती देवता भवति गङ्गा इत्यत्र नास्ति संशीतिः।

**गङ्गाशब्दार्थः -**

''गमयति प्रापयति ज्ञापयति वा भगवत्पदं या सा गङ्गा'' एवञ्च ''गम्यते प्राप्यते ज्ञाप्यते मोक्षार्थिभिः सा गङ्गा'' इति गङ्गाशब्दव्युत्पत्तिः।

अर्थात् गङ्गानद्या भगवत्पदं प्राप्यते यतस्तस्याः भगवत्पदाब्जसम्भूतत्वात्। अत एव सा पुण्यनदी मोक्षार्थिभिः गम्यते प्राप्यते ज्ञाप्यते च। उक्तञ्च प्राज्ञैः -

**गङ्गा गङ्गेति यो ब्रूयात् योजनानां शतादपि।**
**मुच्यते सर्वपापेभ्यो विष्णुलोकञ्च गच्छति॥** इति।

**गङ्गावतरणम्-**

कपिलमुनिशापेन भस्मीभूतान् सगरराजसुतान् उद्धर्तुं भगीरथः पृथिव्यां गङ्गानयनाय तपस्तेपे। तेन तपसा तुष्टः ब्रह्मा भगीरथाय एवमुपिदष्टवान् - ''विष्णुपदाब्जसम्भूतायाः

गङ्गायाः प्रवाहोद्धतिं नियन्त्रयितुं परमशिव एव समर्थो भवति। अतः परमेश्वरानुग्रहार्थं प्रयत्नं कुर्यात्'' इति। ततः स भगीरथः शिवाराधनेन शिवं पर्यतोषयत्। तेनाराधनेन सन्तुष्टः शिवः हिमालयपर्वतं गत्वा स्वीयजटाजूटे पतेति गङ्गां समह्वयत्। सा च गङ्गा तज्जटास्वपतत्। ततः परमशिवः भगीरथप्रार्थनया स्वजटामेकामुत्क्षिप्य गङ्गामुत्ससर्ज। ततः भगीरथमनुसृत्य भागीरथी लोकपावनी अभवत्। उक्तञ्च ब्रह्मवैवर्ते -

**जगाम तां गृहीत्वा च यत्र नष्टाश्च सागराः।**
**वैकुण्ठं ते ययुस्तूर्णं गङ्गायाः स्पर्शवायुना।।**
**भगीरथेन सा नीता तेन भागीरथी स्मृता।।** इति।

**गङ्गाप्रवाहवर्णनम् -**

अस्माकं देशे हरिद्वार हृषीकेश ब्रह्मावर्त प्रयाग वाराणस्यादिषु दिव्यक्षेत्रेषु प्रवहती परमपावनी मन्दकिनी तत्तत्तीरनिवासिनां भाग्यदायिनी भवति। तस्याः प्रवाहः सदा नित्यनूतनतया प्रतिभाति। तादृशगङ्गाप्रवाहस्य सौन्दर्यं मन्दाकिनीकाव्ये 'श्रीभाष्यं विजयसारथिमहाभागैः' एवमुपवर्णितम् -

**अकति मन्दाकिनी चकति मन्दकिनी।**
**तकति मन्दाकिनी मधुरेण पूरेण।।**
**चलति मन्दाकिनी जलति मन्दाकिनी।**
**सलति मन्दाकिनी विमलेन सलिलेन।** इति।

एतादृशस्य गङ्गाप्रवाहस्य दर्शनम् गङ्गाप्रवाहस्थ-विष्णुभक्त्युदकसंस्पर्शनम् , पापहारिणि गङ्गवारिणि निमज्जनं च अत्यन्तपुण्यफलदायकं भवत्यस्माकम्।

अत एव -

**सद्यो गच्छाम तां गङ्गां मुक्तिदां पापशान्तये।**





**हनुमज्जयन्तीं पुरस्कृत्य सप्तगिरिपाठकानां पारायणानुकूलाय इदं श्रीमद्व्यासराजकृतं यन्त्रोद्धारकहनुमत्स्तोत्रम्**

नमामि दूतं रामस्य सुखदं च सुरद्रुमम्।
पीनवृत्तमहावाहुं सर्वशत्रुनिवारणम् ।। ।।१।।
नानारत्नसमायुक्तकुण्डलादिविराजितम्।
सर्वदाऽभीष्टदातारं सतां वै दृढमाहवे।। ।।२।।
वासिनं चक्रतीर्थस्य दक्षिणस्थगिरौ सदा।
तुङ्गाम्भोधितरङ्गस्य वातेन परिशोभिते।। ।।३।।
नानादेशागतैः सद्भिः सेव्यमानं नृपोत्तमैः।
धूपदीपादिनैवेद्यैः पञ्चखाद्यैः स्वशक्तितः।। ।।४।।
व्रजामि श्रीहनूमन्तं हेमकान्तिसमप्रभम्।
व्यासतीर्थयतीन्द्रेण पूजितं च विधानतः।। ।।५।।
त्रिवारं यः पठेन्नित्यं स्तोत्रं भक्त्या द्विजोत्तमः।
विद्यार्थी लभतेऽभीष्टं षण्मासाभ्यन्तरे खलु।। ।।६।।
वाञ्छितं लभते पुत्रं यशोऽर्थी लभते यशः।
पुत्रार्थी लभते विद्यां धनार्थी लभते धनम् ।।७।।
सर्वथा माऽस्तु सन्देहो हरिः साक्षी जगत्पतिः।
यः करोत्यत्र सन्देहं स याति नरकं ध्रुवम्।। ।।८।।

।।इति श्रीव्यासराजविरचितं यन्त्रोद्धारकहनूमत्स्तोत्रम्।।



# पेरियाल्वार् वैभवम्

- के. वेङ्कटनाथन्
चरवाणी - ७९०४३२७४५७

मिथुने स्वातिजं विष्णोः
रथांशं धन्वितः पुरे।
प्रपद्ये श्वशुरं विष्णोः
विष्णुचित्तं पुरः शिखम्।।

श्रीविल्लिपुत्तूरु इति नगरे कलिसकाशात् सप्तचत्वारिंशत्तमे उरुद्रोणनामसंवत्सरे ज्येष्ठमासे शुक्लपक्षे एकादश्यां स्वातीनक्षत्रे भानुवासरे श्रोत्रियश्रेष्ठः मुकुन्दाचार्यः, एवं पदुमय्यार् दम्पत्योः एकः पुमान् शिशुः अजायत। सैव शिशुः विष्णुचित्त इति नाम्ना अभिहितः। भगवतः विष्णोः वाहनः, एवं वेदपुरुषस्य वैनतेयस्य अंश इव भाति। स एव अग्रे पेरियाल्वार् इति नाम्ना लोकविख्यातो अभवत्। सः स्वाभाविकादेव उत्तरबृहन्मन्दिरवतः भगवतः विष्णोः दत्तचित्तः आसीत्। सः भगवतः का सेवा कर्तव्या इति विचिन्वन् तस्य मनसि कंसनिरसनसमये भगवान् श्रीकृष्णः तस्य मालाकाराणि पुष्पाणि पृष्ट्वा तानि धृत्वा मुमोद। तादृशं कृष्णं विचिन्त्य स भगवतः विष्णोः उत्तरबृहन्मन्दिरतः पुष्पकैङ्कर्यमेव करोमि इति निश्चित्य एकं नन्दनवनं निर्माय तत्र सुगन्धपरिमलनानाविधकुसुमाकरान् सस्यान् निर्माय ततः पुष्पाणि स्वीकृत्य मालां रचयित्वा प्रतिदिनं भगवतः निवेद्य मोदमानः आसीत्।

तत्काले पाण्डुदेशभूपतिः श्रीवल्लभदेवः आसीत्। स एकस्मिन् दिने नगरशोधनवेलायाम् एकस्मिन् गृहे वेदिकायाम् अनतिपरिचितम् एकं पुरुषं ददर्श। तमाहूय कोऽसीति पप्रच्छ। स अनतिपरिचितः अवदत्, यत् अहं गङ्गायां स्नानं कृत्वा अत्रागतवान्, अहं तु ब्राह्मणः अस्मि इति। तस्य वचनं श्रुत्वा राजा, यदि त्वं ब्राह्मणः तर्हि त्वया ज्ञातं धर्मं मां श्रावय इति। तदा स ब्राह्मणः राजानं प्रति आह 'वर्षापेक्षितं तत् षण्मासेषु यावत् सम्पादनीयम्, रात्रौ यद्यदपेक्षितं तत् अहनि सम्पादनीयं, वार्धक्ये यद्यपेक्षितं तत् यौवने, अमुष्मिन् लोके यद्यपदेक्षितं तत् सर्वं अस्मिंल्लोके सम्पादनीयमिति'। तत् श्रुत्वा अनन्तरदिवसे 'सेल्वनम्बि' इत्याख्यातं स्वस्य राजगुरुम् आहूय तस्मै रात्रौ यद्यज्ञातं सर्वं अकथयत्। एवं स्वगुरुं राजा उक्तवान् यत्, अस्माकं तु इहलोके दैवबलात् कोऽपि सङ्कोचः वा न्यूनता वा नास्ति। परन्तु मोक्षार्थम् अस्माभिः किं करणीयमिति। तदा गुरुः इत्थमुवाच। वयं तु अमुं प्रश्नं सर्वान् पण्डितान् आहूय तेषां पुरतः स्थापयाम। कः समीचीनमुत्तरं वदति तस्मै सुवर्णबन्धं दास्यामः इति। तदा श्रीविल्लिपुत्तूरनगरे विष्णुचित्तस्य स्थानं भगवान् साक्षात् श्रीमन्नारायणः आगत्य, त्वं गत्वा तादृशं स्वर्णबन्धं नत्वा आगच्छतु इत्यवोचत्। तत् श्रुत्वा तदर्थमहं अनर्ह इति विचिन्त्य भगवन्तं प्रति वक्तुमारब्धं तस्य वाक्यं अनादृत्य, भगवान् आदेशमिव दत्वा गतवान्। ततः प्रातरुत्थाय भगवतः आज्ञा इति स्मृत्वा सः विष्णुचित्तः राजसभां प्रति गन्तुं उद्युक्तः। सः विविधविज्ञानकेन्द्राणां नानाशास्त्रपारङ्गतानां

पण्डितानां समूहेन आवृत्तां राजसभां प्राप्तवान्। तत्र एनं विष्णुचित्तं राजा राजगुरुश्च नम्रभावनया आहूय सत्कृतवन्तौ। तद् तत्रस्थाः विद्याविभूषिताः केचन एतादृशः वेदान्तरसज्ञानमनास्वादितः पुरुषः अस्यां पूजायाम् अनर्ह इति स्वमनसि विचिन्त्य इतस्ततः वार्तां च प्रस्तावितवन्तः। परन्तु परमपूज्यः राजगुरुः एतादृशवाक्यानि अनादृत्य अमुष्मिन् लोके उपयोगार्थं सम्पादनीयेषु विषयेषु ज्ञानविकासार्थं यद्यत् अपेक्षितं यद्यत् करणीयं इति उपदिशतु इति विष्णुचित्तं योजयामास।

सोऽपि मोक्षप्राप्त्युपायं मोक्षफलं च सर्वं श्रुति-स्मृति-इतिहास-पुराणपुरस्सरं सप्रमाणं निरूपयामास। श्रीमन्नारायण एव परतत्त्वं, स्वस्य कैङ्कर्यमेव पुरुषार्थः, भक्तिप्रपत्तिरेव उपायः, एवंविधया मोक्षोपयोगिविषयान् सर्वान् सप्रमाणं निरूपितवान्। एतादृशं श्रुति-स्मृति-इतिहास-पुराणगर्भितं वाक्यं श्रुत्वा अन्ये सर्वे पण्डिताः विनम्रभावनया नमस्कृतवन्तः। राजापि स्वयं तत् स्वर्णबन्धं गृहीत्वा विष्णुचित्तसमीपं गत्वा अनमत्। तत् दृष्ट्वा सर्वे पण्डिताः आश्चर्यचकिताः सन्तः एतादृशः विद्वद्वरेण्यः इतः पूर्वं कदापि अस्माभिः न श्रुतः न ज्ञातः इति परस्परं वाचः विकीर्य नमनं समार्पयन्। राजापि एतादृशं श्रुति-स्मृति-इतिहास-पुराणगर्भितं विष्णुचित्तस्य वाक्यं श्रुत्वा बहुसन्तुष्टः। तं स्वकरिणं आरोह्य नगरवीथिषु कोलाहलेन तस्य विजयोत्सवं रचयितुं सर्वान् स्वजनान् भृत्यान् परिवारान् च नियोजयामास। अतः मतुरानगरवीथ्यां सर्वत्र पट्टिकाभिः तोरणादिभिः विजययात्रां प्रचालयितुं राजा चिन्तितवान्।

तथैव सः तं विष्णुचित्तं स्वकरिणं आरोह्य मतुरानगरवीथिषु विजयोत्सवयात्रां प्रचालितवान्। तादृशस्य स्वभक्तस्य विजयोत्सवयात्रां द्रष्टुं भगवान् श्रीमन्नारायणः गरुडारूढः ब्रह्मेन्द्रशङ्करादिभिः पूज्यमानस्सन् शङ्खचक्राभयधारी पीताम्बरधरस्सन् आगतवान्। तादृशं श्रीवत्सवनमालाधारिणं भगवन्तं श्रीमन्नारायणं दृष्ट्वा अयं विष्णुचित्तः किं करणीयं इति अविज्ञाय मोहवशात् झटिति स्वकण्ठभागे स्थापितं घन्टादयं स्वीकृत्य तादृशं विद्यमानं स्वकुलनिधिं श्रीमन्नानारायणं दृष्ट्वा तस्य अन्येषां दृष्टिः मा भूत् इति विचिन्त्य तस्य गानं चकार। तदेव द्रविडभाषायां फल्लाण्डु इति गानम्। एतादृशं वैभवं दृष्ट्वा सर्वे जनाः सन्तुष्टाः आसन्। राजा भागवतोत्तमं श्रीविष्णुचित्तं पुनः पुनः नमस्कृत्य स्वर्णबन्धं दत्तवान्। विष्णुचित्तोऽपि स्वर्णबन्धं स्वीकृत्य श्रीविल्लिपुत्तरूरनगरं प्रति पुनरागत्य पूर्ववत् भगवतः मालाकरणकैङ्कर्यं कृतवान्। एवं मालाकरणेन सह द्रविडभाषया भगवन्तं श्रीमन्नारायणं श्रीकृष्णं प्रति अत्यद्भुतान् प्रबन्धान् विलिख्य सन्तुष्टः आसीत्। तदेव 'पेरियाल्वार् तिरुमोलीति' प्रसिद्धम्। स्वामिदेशिकैः 'कल्पसूत्रव्याख्यात' इति श्रीपेरियाल्वार् प्रति उक्तम्। अतः श्रीविष्णुचित्तः कल्पसूत्रस्यापि व्याख्यानं कृतवान् इति ज्ञायते।

किञ्च अयं स्वतुलसीवने लब्धां बालिकां "गोदा" इति नामकरणं कृत्वा स्वपुत्रीव पालितवान् । तस्यै तमिळभाषाम्, उत्तमसंस्कारान् च बोधितवान्। तस्याः च बाल्ये एव अतीव कृष्णभक्तिः पाण्डित्यं च आसीत्। कृष्णे भक्त्या तमेव वोढुं निश्चितवती अपि। सा स्वयं वधूरूपेण आत्मानं भावयन्ती प्रवृद्धा। विष्णुचित्तेन कृष्णमालार्पणात् पूर्वमेव मालां वधूः इव धृत्वा दर्पणे पश्यति स्म पुनः स्थापयति च। तदनन्तरं एकस्मिन् दिने तज्ज्ञात्वा दुःखमाप्नोति। तदा स्वयं श्रीकृष्णः तस्य स्वप्ने आगत्य गोदया धृता मालैव मह्यं रोचते इति उक्त्वा शमयति, तां वोढुं सर्वालङ्कारसहितां श्रीरङ्गम् आनेतुम् आदिशति। तदा 'गोदारङ्गनाथयोः विवाहः', लीनः च भवति इति हेतोः अयं रङ्गनाथाय कन्यादाता इत्यपि प्रसिद्धः।

**गुरुमुखमनधीत्य प्राह वेदानशेषान्**
**नरपतिपरिक्लृप्तं शुल्कमादातुकामः।**
**श्वशुरममरवन्द्यं रङ्गनाथस्य साक्षात्**
**द्विजकुलतिलकं तं विष्णुचित्तं नमामि॥**

वयं सर्वेऽपि श्रीपेरियाल्वार् तिरुमोलि इत्यादिदिव्यप्रबन्धान् अधीत्य प्रतिदिनं पारायणं कृत्वा भगवतः प्रीतिपात्राः भवेम॥



## श्रीगोविन्दराजस्वामिनः ब्रह्मोत्सवदृश्यमालिका
## (१८-०५-२०२१ तः २६.०५.२०२१ पर्यन्तम्)





## श्रीपद्मावतीश्रीनिवासपरिणयोत्सवदृश्यमालिका।
## (२०२१ मे २० तः २२ पर्यन्तम्)









तिरुपति श्रीवेङ्कटेश्वर वेदविश्वविद्यालये २०२१, मे १४ दिनाङ्के
''अक्षयतृतीया'' सन्दर्भे शास्त्रोक्तरीत्या अचरिता 'श्रीलक्ष्मीनारायणपूजा'।





अनतिकाले तिरुमल वेदविज्ञानपीठे समाचरिते ''पूर्वाषाढानक्षत्रेष्टियागे'' भागग्राहिणः
ति.ति.दे. अधिकार्यनिर्वहणाधिकारिणः श्री ए.वि.धर्मारेड्डि महोदयाः तथा ति.ति.दे.





अनतिकाले तिरुमल वेदविज्ञानपीठे समाचरिते ''पूर्वाषाढानक्षत्रेष्टियागे'' भागग्राहिणः
ति.ति.दे. अधिकार्यनिर्वहणाधिकारिणः श्री ए.वि.धर्मारेड्डि महोदयाः तथा ति.ति.दे.
पालकमण्डलिसभ्याः श्री शिवकुमार्, इतराधिकारिणश्च।




अस्मासु बहुसद्गुणाः सन्ति। वयमपि दानं कुर्मः। सत्कार्यं कुर्मः। सत्कार्यकरणकाले तेन सह रूप्यकं रूप्यद्वयं वा दद्मः। दानकरणं सद्गुणः। परन्तु, तेन सह अस्मन्मनसि तत्समये कीदृशी भावना वर्तते? इति परिशनीलने सति, 'अहं ददामि' 'सः मत्सकाशात् एतद्धनं स्वीकरोति' इति मुखे अप्रसन्नता, सर्वम् अहङ्कारपूरितं भवति मनः। 'तस्य जीवितमुद्धरन्नस्मि' इति धनं दद्मः। गुणद्वयं मिलितम्। एकः सद्गुणः, एकः दुर्गुणः। परोपकारं कृतवन्तो वयम्। करणानन्तरं किं कुर्मः? सामान्यतः वयं तं भर्त्सयामः। उपकारं कुर्वन्तः सन्तः तं भर्त्सयामः। उपकारकरणं किमर्थम्, तदनु भर्त्सनं किमर्थम्? इति प्रश्नो नोदेति, उपकारकरणादेव अधस्तात् प्रभृति राक्षसगुणः उद्बुद्धो भवति।

एवंरीत्या अनेके सद्गुणाः, दुर्गुणाश्च सम्भूय ते अविनाभावसम्बन्धेन भवन्ति मनुष्येषु। ते सद्गुणदुर्गुणाः परस्परं युद्धं कृत्वा अन्ततः दुर्गुणैः सद्गुणानां पराजयकालः सन्निहितो भवति। तथा दुर्गुणजयकाले सन्निहिते सति, वयं राक्षसप्रायाः अभूम इत्यर्थ एव। पुनः भविष्यज्जन्मनि, तदनन्तरजन्मनि राक्षसजन्म आगमिष्यति इति नास्ति नियमः। यदा राक्षसवत् अवर्तेम, तदैव राक्षसजन्म इत्यभिप्रायः। एतादृशप्रसङ्गो मा भूत्। मनुष्यैः जगरूकतया वर्तितव्यम्। अस्माभिः दैवीसम्पत् आर्जनीया। तेषु यत्किञ्चित् लेशतया दुर्गुणाः सन्ति चेदपि ते दुर्गुणाः अस्माकं मास्तु, तदतिक्रमणसाधनं सम्पादनीयम्। राक्षसगुणाः सुतरां मास्तु। मनुष्याणां सद्गुणाः अभिवृद्धा भवन्तु। साक्षात् अखिलाण्डकोटि ब्रह्माण्डनायकस्य पादपद्मे भजेम परमात्मज्ञानं सम्पादनीयमित्युद्देश्यम् इति ब्रह्मणोऽभिप्राय इति स्पष्टतया ज्ञातो भवति। एतत्स्फूर्त्यैव श्रीकृष्णपरमात्मा अस्मभ्यं गीतामुपदिदेश इति ज्ञातव्यम्। अर्जुन एकं निमित्तमात्रम्। अर्जुने ये गुणाः ते सर्वे अस्मासु वर्तन्ते। अर्जुने के गुणाः सन्ति? अर्जुनः किमालोचितवान् इत्यमुं विषयं वयं विस्तरेण अस्मिन्नध्याये जिज्ञासवः स्मः। वयमपि तादृशप्रसङ्गे तथैव आलोचयामः इति ज्ञात्वा श्रीकृष्णः अस्मभ्यं यथा उपयोगो भवेत् तथा स्थितस्थानात् उन्नतस्थानप्राप्तिः यथास्यात्तथा उपदेशं कृतवान्।

एतादृशशोपदेशं वयं केवलं श्रीकृष्णः अर्जुनं प्रत्येव कृतवान्, श्रीकृष्णरूपी अर्चावतारी च श्रीवेङ्कटेश्वरदेव एव अस्मान् प्रत्यपि करोति इति यदि अनुसन्धानं कुर्मः, तदा श्रीकृष्णेन कृतस्य गीतोपदेशस्य फलितं सम्पूर्णं सिद्ध्यति। अयं प्राथमिकः विषयः। एतद्भावनया वयं गीतामृतस्य सम्यगर्थं जानीमश्चेत्, तदा ह्यस्तनदिने भगवद्गीतायां धृतराष्टः संजयं प्रति किं पृष्टवान्? इतीदानीं जानीमः। तस्मिन् युद्धरङ्गे के के? किं किं कृतवन्तः? कीदृशविचारः सञ्जातः? इति पृष्टवान्। तस्य प्रश्नस्य समाधानररूपतया सञ्जयः एवं वदति-'दृष्ट्वा तु पाण्डवानीकम्? इति। सञ्जय उक्तवान्- तत्र सेना स्थिता वर्तते। तत्र पाण्डवा अपि सन्ति। त्वत्पुत्रो दुर्योधनः द्रोणं समेत्य वचनमुवाच इति। सः दुर्योधनः किं पप्रच्छ? एषः द्रोणः किं वदति? इति पश्यामः। सः धृतराष्टः किं पृष्टवान्? इति चेत् 'धर्मक्षेत्रे' इति। अयं भावः - युद्धार्थमेव धर्मसाधनभूमौ कुरुक्षेत्रे मिलिताः मदीयाः दुर्योधनादयः, पाण्डवाः च किं अकुर्वन्? इति। सञ्जय उवाच-दुर्योधनः किं कृतवान् इति। अत्रेयमाशङ्का क्रियते, सर्वे मिलित्वा युद्धं कृतवन्तः इति वा, सर्वे मिलित्वा चर्चां कुर्वन्ति इति वा, सर्वे शङ्खं दध्मुः इति वा धृतराष्ट्रप्रश्नस्य समाधेयम् परन्तु दुर्योधनव्यापारं किमर्थं वदति सञ्जयः इति। वयमत्र सञ्जयस्य समाचारनैपुण्यं सर्वं सम्यक् श्रद्धया जानीमः। सः राजभृत्यः। जागरूकतया राजभृत्यस्याभिप्रायं ज्ञातवान्। धृतराष्टनृपस्य भावः कः? इति चेत् 'धर्मक्षेत्रे' इत्युक्तवान् किल? तद् धर्मरक्षकक्षेत्रम्। मनुष्यस्य आलोचनाविधानं सामान्यतः अन्यद् भवति। धर्मक्षेत्रं प्रति गत्वा विचारकरणमन्यत्। यत्किञ्चित्क्षेत्रं गच्छामश्चेत् तत्र सद्भावना उदेति। तेन कारणेन पुनः अन्यक्षेत्रं गच्छामः नो चेत् तस्मिन् क्षेत्रे एव कानिचन दिनानि निवसामः, नो चेत् अङ्गप्रदक्षिणं कुर्मः, नो चेत् सेवान्तरं कर्मः इति सद्भावनाः भवन्ति। एतत्प्रसङ्गे पाण्डवाः धर्मप्रधानाः। अतः युद्धं मास्तु, हिंसा मास्तु, एतत्सर्वं त्यजामः। भवद्राज्यं भवन्त एव स्वीकुर्वन्तु इति मत्पुत्रं दुर्योधनं त्यक्त्वा गताः किम्? उत मत्पुत्र एव तत्र गमनान्तरं परिवर्तितः सन् युद्धं मास्तु तद्राज्यं तेभ्य एव ददमः इत्यभिप्राये युद्धं त्यक्त्वा प्रतिनिवृत्तो वा? मत्पुत्रः तथा नागच्छतीति विश्वासोऽस्ति परन्तु युद्धात् प्रतिनिवर्तते इति भयमप्यस्ति इति धृतराष्ट्रप्रश्नाभिप्रायः। तयोः मध्ये के किं कृतवन्तः? पाण्डवाः युद्धं त्यक्त्वा गतवन्तो वा? उत मत्पुत्राः युद्धं त्यक्त्वा पाण्डवेभ्यः राज्यम् समार्पयन्? इति धृतराष्ट्रप्रश्नस्य अभिप्रायमेव 'धर्मक्षेत्रे' इत्यनेन ज्ञातवान्। अत्यन्तं बुद्धिमान्, सुसेवकश्च आसीत् सञ्जयः। सेवकधर्मः, परिपालनव्यवस्था अपि सक्रमं भवति यदा सेवकाः राज्ञः अभिप्रायं शीघ्रं सम्यक् जानन्ति तदा।

सञ्जयः वदति - भवत्पुत्रः युद्धं न त्यजति। व्याकुलता मास्तु। युद्धकरणे सुदृढसङ्कल्पयुक्तः अस्ति। अतः भवन्तः धैर्येण स्युः इति। इदमेव सौशील्यं सज्जनानाम्। यतः - अग्रे भीष्मः शरशय्यायां पतति, तदा न मृतश्चेदपि मृतप्राय एव भवति। तज्ज्ञात्वा अपि अमुं विषयम् अनुक्त्वा दुर्योधनस्य विषयं धृतराष्ट्रप्रियम् उक्त्वा तं श्रान्तं चकार। इदमेव सञ्जयस्य सुस्वभावः।।

(अवशिष्टम् अग्रिमसञ्चिकायाम्)

# हरिदासवाङ्मये
# श्रीवेङ्कटाचलाधीशः


तेलुगुमूलम् - सुस्वरं नागराजाचार्युलु

संस्कृतानुवादः - डा.गङ्गिशेट्टि लक्ष्मीनारायणः

चरवाणी - ९४९४२४८३४८




**अनुदिन अनेक रोगगळा अनुभविसुवेनो**
**घन महिम नीने बल्लेया।**
**तनुविनलि बलविल्ल नेनेद मात्र सलहुव**
**हनुमदीश पुरंदर विठल नीने ओलिदु।।**

अहम् उत्तममानवजन्मनः सम्प्राप्तेः अनन्तरमपि त्वां न भजित्वा क्लेशयुक्तोऽभवम्। हे स्वामिन्! तादृशं मां रक्षतु। कदा भवतां पादौ समाश्रित्य भवन्तं सम्पूज्य धन्यो भविष्यामि? अन्धकारण्ये दण्डायमानस्य मम पुरतः सुन्दरतया प्रत्यक्षो भवतु। स्वामिन्! प्रतिदिनं नैकरोगैः पीडितं मां न पश्यति वा? हे परन्दरविठल! स्मरणमात्रेण आगत्य रक्षति किल, आगच्छतु मां रक्षतु।

नवविधभक्तिमार्गेषु अन्यतमस्य आत्मनिवेदनं कुर्वन् ''नानेनु माडेदनो वेङ्कटराया नी यन्न सलह बेकु।।'' मया कः अपराधः कृतः? त्वमेव मां रक्षतु। गज-धृव-प्रह्लाद-द्रोपदीत्यादीन् कथं रक्षितवान् तथैव मामपि रक्षतु। यदि मया दोषाः आचरिताः तथापि मां रक्षतु। ''तप्पु गळेल्ल नी नोप्पि कोळ्ळो नम्मप्प कायो'' इत्येवं सदाचारसम्पन्नोऽहं त्वां तव भक्तान् च न सेवितवान्, तथापि मां रक्षतु। ''अष्टादरु एन्नव गुण एणिसदे।सत्यसङ्कल्प तिम्मप्प नीनु'' इति पुरन्दरदासवर्याः कथयन्ति। सौशील्यवान्, निरहङ्कारी पुरन्दरदासवर्यः अस्य गीतस्य अन्ते -

**एष्टु हेळलि अवगुणगळेल्ला अवु।**
**इष्टु अष्टु एंदु एणिके यिल्ल।**
**दृष्टियिंदलि नोडु दीनवत्सल सर्व -**
**सृष्टिगोडेय पुरंदरविठल।।**

मया आचरितं पापकर्म लेशमात्रं नास्ति। अगण्याः दोषाः मया आचरिताः इति दृष्ट्या मां रक्षतु। (अपराधसहस्राणि क्रियन्तेऽहर्निशं मया) ''न मे भक्तः प्रणश्यति'' भगवन्तं ये विश्वसन्ति तेषां नाशः न भवति भगवति श्रीवेङ्कटेश्वरे विश्वासं कृत्वा ये भक्ताः भवन्ति, तेभ्यः दुरितभीतिः न भवति इति पुरन्दरदासवर्यः श्रीवेङ्कटेश्वरे विद्यमानां भक्तिम् इत्थं प्रकटयन्ति।

**वेंकटरमण वेदांत निन्नयपाद पंकजकंडमेल।**
**मंकु मानवर बेडिसुवुदुचितवे। शंखचक्रांकितने।।**

हे वेङ्कटरमण! वेदान्तवेद्य! तव पादपद्मदर्शनान्तरमपि अल्पेषु विनिवेदनं कारयति, एतत् युक्तं वा?

**क्षीरसागरव पोंदिदव मथिसिद। नीरुमज्जिगे काणने।**
**चारु कल्पवृक्षदडियलि कुळितवगे। दोरे तिन्त्रिणि बयकेये।।**
**सार्वभूपालन सूनु एंदेनिसिदवगे। सूरे गूळिन तिरुके।**
**वारि लक्ष्मीकांत निन्न पोंदिदवगे। दारिद्र्यदट्टुळिये।।**
**सुरवदियलिमिन्दु शुचि आदमेलिन्नु दुरितगळट्टुळिये।**
**परम पुरुष निन्न पोंदिद दासर्गे अरिगळ भीतियुंटे।।**
**गरुडन मन्त्रव कलितु जपिसुवगे उरगन हावळिये।**
**हरि पक्कदोळु मने कट्टिदनरनिगे। करिगळ भीतियुंटे।।**
**परम पुरुष गुण पूर्ण नीनहुदेंदु**

**मोरेहोक्के कायो एन्न।**
**उरगाद्रिवास श्रीपुरंदरविठल। परब्रह्म नारायण।।**

क्षीरसागरमाश्रितः कोऽपि अधिकजलयुक्ततक्रम् इच्छति वा? कल्पवृक्षच्छायायामुपविष्टः तिन्त्रिणीफलमिच्छति वा? चक्रवर्तिनः पुत्रः भिक्षान्नं स्पृशति वा? हे लक्ष्मीपते! त्वां समाश्रितस्य दारिद्र्यभीतिः भवति वा? सुरनद्यां स्नातस्य पुनः पापं सम्भवति वा? गरुडमन्त्रजपं करोति चेत् सर्पभीतिः भवति वा? सिंहस्य समीपे गृहनिर्माणं कृतस्य गजेभ्यः भीतिः भवति वा? हे परमपुरुष! त्वं गुणपरिपूर्णः इति ज्ञात्वा अहं तव शरणागतोऽभवम्। हे उरगाद्रिवास! पुरन्दरविठल! परब्रह्मन्! नारायण! रक्षतु।

''ब्रह्मरुद्रादिवन्द्यं त्वां भजे वेङ्कटनायकम्'' इति श्लोकपादं तथैव अनुसरन् ''ब्रह्मशङ्करादिवन्द्य एनगे मुक्ति करुणिसो! वेङ्कटेश बेडिकोंकृपेय पालिसो'' - हे वेङ्कटेश त्वां प्रार्थयामि। मम उपरि अनुकम्पं प्रदर्शयतु इति वदन् पुरन्दरदासवर्यः सार्वभौम! ईश! भगवन्! त्वं करुणया यद् अनुगृह्णाति तद् महाप्रसादत्वेन स्वीकरोमि इति वदति। ''तेन त्यक्तेन भुञ्जीथाः'' पुरन्दरदासवर्यस्य कीर्तनेषु श्रीवेङ्कटेश्वरसम्बन्धे सिन्धुभैरविरागे विद्योतमाने ''वेङ्कटाचलनिलयं वैकुण्ठपुरवासं पङ्कजनेत्रं परमपवित्रं शङ्खचक्रधरचिन्मयरूपम्'' इति कीर्तनं सुप्रसिद्धम्। सङ्गीतविद्याविशारदाः कार्यक्रमेषु अवश्यम् एतत् कीर्तनं गायन्ति। एवमेव ''वेङ्कटरमणने बारो शेषाचलवासने बारो, वेणुनाद बारो वेङ्कटरमणेन बारो'' इत्यपि कीर्तनं निश्चप्रचं गायन्ति।

खरहरप्रियरागे सुप्रसिद्धं ''तिरुपति वेङ्कटरमण निनगेतके बारदु करुण'' इति कीर्तनं पञ्चदशचरणेषु अन्त्यानुप्रासाक्षरैः विद्योतते। अस्मिन् कीर्तने भगवतः श्रीनिवासस्य गुणगणकीर्तनेन सह श्रीनिवासं कथं सेव्यमिति पुरन्दरदासवर्यः प्रोक्तवन्तः। कीर्तनस्य अन्तिमे ''पापविनाशिनि स्नान। हरि पादोदकवे पान। कोपतापगळ निधान। नम्म पुरन्दरविठलन ध्यान'' हरिपादोदकपानं कोपतापननिधानमिति प्रबोधितवन्तः। 'नोडु नोडु वेङ्कटेश नोडु नोटव। अवनु आडुवाटन बेटिगागि होरटु बन्द प्रख्यातव' इति चतुस्सप्ततिचरणयुक्ते कीर्तने धनुर्बाणपाणिः किरातवेषधारी भगवान् श्रीनिवासः अश्वमारुह्य आखेटार्थं गत्वा पद्मावतीं दृष्ट्वा समागतः इति वेङ्कटेशपुराणे विद्यमानं वृत्तान्तं सर्वं वर्णितवन्तः। अस्मिन् कीर्तने अन्त्यानुप्रासालङ्कारः वर्तते। अस्य कीर्तनस्य अन्तिमे ''स्वामि वेङ्कटेश बेटिमाडिद। स्वामि बेटिमाडिद। स्वामि बेटिमाडिद। अप्प वेङ्कटेश तानु ओप्पिदिंदले। स्वामि गिरिगे बंदु श्रीपुरंदरविठल वेंदुहागेनिंदने स्वामि हागे निंदने।।''

पुरन्दरदासवर्याणां स्तुतिकीर्तनेषु वेङ्कटेश्वरमन्त्रसम्बन्धकीर्तनम् वेङ्कटेशमन्त्रस्य विशालार्थं विवृणोति। यथा आदित्य-भविष्योत्तर-गरुडपुराणेषु वेङ्कटेशशब्दस्य अर्थविवरणं कृतं तथैव पुरन्दरदासवर्यः अस्मिन् कीर्तने वेदशास्त्रपुराणेभ्यः विषयान् सङ्गृह्य चत्वारि अक्षराणि बहुप्रकारैः अवर्णयन्।

**वेंकटेश निन्न नामक्के मोदलु नाकक्षरगळु नोडो।।**
**बिंक वाद नाल्कु वेदशास्त्रपुराणगळदरिंद।।**

इत्येवं पल्लवीं प्रारभ्य वेम् इत्यक्षरस्य अर्थं मत्स्य, कूर्म, वराह, नारसिंह-अवतारान् अवर्णयत्। क- इत्यस्य अक्षरस्य वामन, परशुराम, रामकृष्ण अवतारान् वर्णितवान्। टे-इत्यस्य अक्षरस्य बुद्ध, कल्कि अवतारान् वक्षस्थले स्थितां लक्ष्मीं च अवर्णयत्। श-इत्यस्य अक्षरं वर्णयन् -

**शाकद तुदि यल्लि शांत पांडवरु द्रौपदिवास**
**वास श्यामसुंदर शरणु सज्जन गुरुचन्द्रभास।**
**शाम सहित बहुमुक्तिय पोंदिद रुक्मांद पोष**
**शाश्वत सलहोव पुरंदर विठल कलियुग वेङ्कटेश।।**

पुरन्दरदासवर्यः भारत-भागवतादि इतिहासपुराणेषु प्रोक्तान् अर्थान् एव अकथयत्। लक्षाधिककीर्तनेषु असङ्ख्याकानि कीर्तनानि श्रीनिवासस्तुतिपूर्वकाणि माहात्म्यवर्णनयुक्तानि च सन्ति। परं तानि अलभ्यानि, यानि प्राप्तानि तानि सर्वाणि अधिकृत्य व्याख्यानं कुर्मः चेत् ग्रन्थः विस्तृतकायं प्राप्नोतीति भयात् स्थालीपुलाकन्यायवत् विकरणशुध्यर्थं दासवर्यस्य श्रीनिवासस्तुतिकीर्तनानि उदाहृत्य व्याख्यानं कृतम्।

(अवशिष्टम् अग्रिमसञ्चिकायाम्)

नीतिकथा

# गुरुभक्तिः

- कार्तीक जोषि
चरवाणी - ८९१९८७११९४



महत्वात् भारवत्वात् च महाभारतमुच्यते। तादृशमहाभारते अस्माभिः ज्ञातव्याः बहवः अंशाः लभ्यन्ते। तच्च महाभारतं भ्रातृणां मरणकथाघटितमिति सुविदितविषय एव। परन्तु तत्रापि लोकोपकारविषयाः नीतिकथाः समुपलभ्यन्ते। तत्रस्थाम् एकां नीतिकथां पश्यामः।

महाभारते श्रूयते धौम्य इति कश्चन आचार्यः तस्य उपमन्युः, आरुणिः, बैद इति त्रयः शिष्याः। तत्र एकदा धौम्यः शिष्यम् आरुणिं प्रति उवाच - अस्माकं क्षेत्रे जलप्रवाहं स्तब्दं कुरु इति। तदा शिष्यः आरुणिः क्षेत्रं गत्वा तं प्रवाहं मृदा स्थगयति। तदापि स प्रवाहः न स्थगितः, तदा सः बहुयत्नं चकार चेदपि न स्तब्दः प्रवाहः। तस्मात् सैव साक्षात् जलप्रवाहं स्तब्दुं प्रतिबन्धरूपेण शिश्ये। तस्मिन्नभ्यन्तरे सायाह्नः जातः। तदापि नागतम् आरुणिं द्रष्टुं गतवान् धौम्यः। तदा क्षेत्रे जलप्रवाहस्य प्रतिबन्धकत्वेन स्थितम् आरुणिं दृष्ट्वा आश्चार्यचकितो भूत्वा सर्वविद्यापारङ्गतो भव इति वरम् अदात्। अत एव स उद्धालकेति प्रसिद्धः।।

पुनः एकदा धौम्यः शिष्यम् उपमन्युं गोपरिरक्षणार्थम् आदिशत्। सः प्रतिदिनं गोभिः सह गत्वा सायाह्ने आगच्छति स्म। तदा गुरुः पृच्छति शिष्यस्य मुखे उत्साहं दृष्ट्वा, किं भुक्तवान्? इति। तदा सः भिक्षाटनं कृत्वा भुक्तवान् इति वदति। अस्तु इतः परम् एवं मा खादतु यतोहि गुरुकुले एवं न करणीयं, भिक्षाटनं कृत्वा गुरवे निवेदनीयं तदा गुरुः यत् ददाति तत् भोक्तव्यमिति वदति। ओं इत्युक्त्वा पुनः सूर्योदयकाले गोरक्षणार्थं व्रजति। पुनः सायाह्ने आगमनवेलायां उत्सुकम् उपमन्युं दृष्ट्वा पृच्छति, भिक्षां तु अत्रैव दत्तवान् तथापि कुतः उत्साहः दृश्यते तव मुखे? इति। तदा शिष्यः गोक्षीरं पीतवान्। तस्मात् एवमस्मीति ब्रवीति। अस्तु इतःपरम् एवं मा पातव्यं यतो हि तेन क्षीरेण आगतं घृतं यज्ञाय अपेक्षत इति। पुनः आगामिदिनेऽपि सः गोसंरक्षणार्थं चरति। तदा तस्य बहु बुभुक्षा जाता। भिक्षां तु न भोक्तव्यं गुरवे अनिवेद्य, क्षीरमपि न पातव्यं तस्मात् किं कर्तव्यम् इति विचिन्त्य तत्रैव एकस्य वृक्षस्य क्षीरं पिबति। तेन स अन्धस्सञ्जातः। तदा स एवमेव अटित्वा एकस्मिन् कूपे पतति। सायाह्ने गावः आगताः किन्तु उपमन्युः न आगतः। तदा तस्मै गुरुः अश्विनीमन्त्रं उपदिशति। मन्त्रपारायणेन अश्विनीदेवते प्रादुर्भवतः। ते तु एकस्मिन् पात्रे क्षीरं ददतः। तेन पानेन अन्धत्वं गच्छतीति कथयतः। स उपमन्युः गुरवे अनिवेद्य अहं न स्वीकरोमि इति प्रतिवदति। तद्वाक्यं श्रुत्वा गुरुः प्रीत्या एतत् अनिवेद्यापि पातुं शक्यते इति शिष्याय आदिशति। तदा स क्षीरपानेन नेत्रे प्राप्नोति। अस्मिन् गुरुभक्तिं दृष्ट्वा तमपि बहुविद्यापारङ्गतं करोति गुरुः। पुनः सः बैदोऽपि गुरुशुश्रूषया गुरुप्रीतिपात्रो भूत्वा सर्वज्ञत्वं प्राप इति। तथा च यावत् गुरुभक्त्या गुरुं सेवन्ते तावता अस्माकं ज्ञानमभिवर्धते। अतः केवलं गुरुः यद्वदति तत् निश्चयेन पालयामश्चेत् नः श्रेयः भवत्येव इति शिष्यः यथा वर्तनीयः इति अनया कथया ज्ञायते।।

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः।।





# बालहनुमान्

तेलुगु मूलम् - श्री डी.श्रीनिवास दीक्षितुलु
संस्कृतानुवादः - यल्.अक्षयाचार्यः
चित्राणि - श्री के.तुलसीप्रसादः




































अग्रिमसंचिकायां श्रीवेङ्कटेशस्य दिव्यलीलाविलासान्तरं दृष्ट्वा धन्याः भवेम...

# रसप्रश्नाः

१. परशुरामस्य पितुः नाम किम्?
अ. विश्वामित्रः आ. विश्रवसः
इ. जमदग्निः ई. कश्यपः

२. अर्जुनस्य शंखस्य नाम किम्?
अ. पाञ्चजन्यम् आ.उद्घोषम्
इ. पुण्डरीकम् ई. देवदत्तम्

३. सङ्कर्षणः इति कस्य अपरं नाम?
अ. कर्णस्य आ. दुर्योधनस्य
इ. बलरामस्य ई. परशुरामस्य

४. वसुषेणः कः?
अ. कर्णः आ. युधिष्ठिरः
इ. अर्जुनः ई. श्रीकृष्णः

५. वसिष्ठस्य पत्नी का?
अ. अहल्या आ. अरुन्धती
इ. वराङ्गी ई. सत्यवती

६. अज्ञातवासकाले द्रौपद्याः नाम किमासीत्?
अ. सैरन्ध्री आ. कृष्णा
इ. पाञ्चाली ई. हिरण्याक्षी

७. श्रीकृष्णस्य सारथेः नाम?
अ. वृषणः आ.अतिरथः
इ. दारुकः ई. नीलः

८. इन्द्रस्य सारथिः कः?
अ. सुवर्चाः आ.मातलिः
इ. वृषकेतुः ई. प्रहस्तः

९. धर्मराजः इति प्रसिद्धः कः?
अ.युधिष्ठिरः आ.श्रीकृष्णः
इ. अर्जुनः ई. कर्णः

१०. लक्ष्मणः कस्य अंशावतारः?
अ.शिवस्य आ.सुदर्शनस्य
इ. विष्णोः ई. शेषस्य

समाधानानि - १.इ २.ई ३.इ ४.अ ५.आ ६.अ ७.इ ८.आ ९.अ १०.ई

## चित्रलेखनम्

अस्य चित्रपटस्य रञ्जनं कुर्मः वा?



प्रदत्तं चित्रपटम् अधोनिर्दिष्टप्रदेशे स्थापयामो वा?



Edited and Published on behalf of T.T.Devasthanams by Prof. K.Rajagopalan, Ph.D., Chief Editor, T.T.D., and
Printed at T.T.D.Press by Sri. P.Ramaraju, M.A., Special Officer., (Press & Publication), T.T.D. Press, Tirupati - 517 507.


सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी।

तिरुमलतिरुपतिदेवस्थानम्

# अप्पलायगुण्ट
# श्रीप्रसन्नवेङ्कटेश्वरस्वामिनः
# ब्रह्मोत्सवः

२०२१ जून् १९ तः २७ पर्यन्तम्



**१९-०६-२०२१ मन्दवासरः**

प्रातः -ध्वजारोहणम्, रात्रौ - चन्द्रप्रभवाहनम्

**२०-०६-२०२१ भानुवासरः**

प्रातः - सूर्यप्रभवाहनम्, रात्रौ - महाशेषवाहनम्

**२१-०६-२०२१ इन्दुवासरः**

प्रातः - लघुशेषवाहनम्, रात्रौ - सिंहवाहनम्

**२२-०६-२०२१ भौमवासरः**

प्रातः - कल्पवृक्षवाहनम्, रात्रौ - हनुमद्वाहनम्

**२३-०६-२०२१ सौम्यवासरः**

प्रातः - मौक्तिकमण्टपवाहनम्, रात्रौ - गरुडवाहनम्

**२४-०६-२०२१ बृहस्पतिवासरः**

प्रातः - कल्याणोत्सवः, रात्रौ - गजवाहनम्

**२५-०६-२०२१ भृगुवासरः**

प्रातः - रथोत्सवः, रात्रौ - धूल्युत्सवः

**२६-०६-२०२१ मन्दवासरः**

प्रातः - सर्वभूपालवाहनम्, रात्रौ - अश्ववाहनम्

**२७-०६-२०२१ भानुवासरः**

प्रातः - चक्रस्नानम्, रात्रौ - ध्वजावरोहणम्

